|| श्री गणेशाय नमः ||

अथ

# हरितालिका व्रत-पूजाविधिः

सर्वं स्थूलतनुं गजेन्द्रवदनं लम्बोदरं सुन्दरं ;
प्रस्यन्दं मदगन्धलुब्धमधुपव्यालोलगण्डस्थलम्।
दन्ताघातविदारितारिरुधिरैः सिन्दूरशोभाकरम् ।
वन्दे शैलसुतासुतं गणपतिं सिद्धिप्रदं कामदम् ।।

छन् जस्का वशमा तिनैभुवनका, मालीक द्यौता पनि ।
गर्छन् हासविलास दिव्य वनमा, डाकेर जो गोपिनी ।।
जस्को ध्यान गरेर घोरवनमा, बस्छन् तपस्वी मुनि ।
माग्दछू म सुबुद्धि शुद्ध मनले, देउन् मलाई तिनी ।।

भाद्रशुक्ल तृतीया (हरितालिका) को व्रत गर्ने नारीले प्रातः तिलको पिना र अमलाको चूर्णले स्नान गरी नित्य क्रिया सकेर शुद्ध वस्त्र धारण गरी पूजास्थानमा बसेर पहिले आचमन गरी तामाको थालीमा कर्मपात्र बनाउनु । त्यसको विधान-

जल- ॐ यद्देवा देवहेडनन्देवासश्च कृमावयम् ।
अग्निर्मातस्मा देनसो विश्वान्मुञ्चत्व ꣳ हसः ॥
यदिदिवा यदिनञ्चमेना ꣳ सिचकृमावयम् ।
वायुर्मातस्मा देनसो विश्वान्मुञ्चत्व ꣳ हसः ।
यदिजा ग्रद्यदिस्वप्नऽएना ꣳ सिचकृमावयम् ।
सूर्य्योमा जस्मा देनसो विश्वान्मुञ्चत्व ꣳ हसः ॥

यस मन्त्रले कर्मपात्रमा जल हाल्नु ।

पवित्र- ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण
पवित्रेण सूर्य्यस्य रस्मिभिः ।
ॐ शन्नोदेवीर भिष्टयऽआपो भवन्तु पीतये । शंयोरभिश्रवन्तुनः ।।
तिलान्- ॐ तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः ।
प्रत्क्नमद्भिः पृक्ताः स्वधया पितॄँल्लोकान् पृणाहिनः स्वाहा।।
यो मन्त्रले कर्मपात्रमा तिल हाल्नु ।
यवान्- ॐ यवोसि यवयास्मद्द्वेषो यवयारातीः ।।
यस मन्त्रले कर्मपात्रमा जौ हाल्नु ।
अक्षतान्- ॐ अक्षन्नमी मदन्तह्यव प्रियाऽअधूषत ।
अस्तोषत स्वभानवोविप्रा नविष्ठया मती योयान्विन्द्रते हरिः ।।
यस मन्त्रले कर्मपात्रमा अक्षता हाल्नु ।

चन्दनम्- ॐ गन्धद्वारान् दुराधर्षान् नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥

यस मन्त्रले कर्मपात्रमा चन्दन चढाउनु ।

पुष्पाणि- ॐ श्रीश्चते लक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमिश्विनौव्यात्तम्।
इष्णन्निषाण मुम्मऽ इषाण सर्वलोकम्मऽइषाण ॥

यस मन्त्रले कर्मपात्रमा फूल चढाउनु ।

अनि तीन टुक्रा कुश लिएर शरीरमा र सबैतिर जल छर्कनु ।

ॐ अपवित्रः पवित्रो वा सर्वावस्थांगतोऽपि वा ।
यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥

सर्षपान्- अप सर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।

ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ।।

यति पढेर चारैतिर सरस्यूँ छरिदिनु ।

अब पूजा गर्ने महिलाले कुशको औंठी लगाएर शरीर शुद्धिका लागि गोदान गर्न दुनामा द्रव्य राखी त्यसको पूजा गर्नु ।

मन्त्र- ॐ नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च ।
नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ।
ॐ इरावती धेनुमती हिभूतꣳ सूयवसिनी मनवेदसस्या।
व्यस्कभ्नारोदसी विष्णवे ते दाधर्त्थ पृथिवोमभिता भयूखैः स्वाहा ।।

यस मन्त्रले ब्राह्मणलाई टीका लगाइदिनु ।

ॐ आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यञ्च।
हिरण्ययेन सविता रथेन देवो याति भुवनानि पश्यन् ॥

अब तीन टुक्रा कुश लिएर आफ्नू शरीरमा जल छर्कनु।

ॐ मनो मे तर्पयत वाचं मे तर्पयत प्राणान् मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रम्मे तर्पयतात्मानं मे तर्पयत प्रजाम्मे तर्पयत पशून्मे तर्पयत गणान्मेमा वितृषन् ॥

अब तिल-कुश लिएर दुनाको द्रव्यमा छुनु र संकल्प गर्नु ।

हरिः ॐ तत्सत् ३ ॐ विष्णुः ३ श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य सकलजगत्सृष्टिकारिणो ब्रह्मणो द्वितीयप्रहरार्धे श्रीश्वेतवाराहकल्पे वैवश्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे प्रह्लादाधिपत्ये

मनौ सप्तमे जम्बूद्वीपे भारतवर्षे भरतखण्डे आर्यावर्तान्तरगते हिमवद्दक्षिणैकदेशे विन्ध्याचलादुत्तरे अमुकक्षेत्रे अमुकनाम संवत्सरे अमुकायने अमुक र्तौ अमुक मासे अमुकपक्षे ऽमुकवासरे ऽमुकराशिस्थिते श्रीसूर्य्ये ऽमुक राशिस्थिते चन्द्रमसि, अमुकराशिस्थिते देवगुरौ अन्येषु ग्रहेषु यथा-यथा स्थानस्थितेषु सत्सु एवं ग्रहगुणविशेषेण विशिष्टायां शुभ पुण्यतिथौ अद्येह अमुक गोत्रा अमुक नामाऽहं श्रुति-स्मृति पुराणोक्त फलप्राप्त्यर्थं मम इह जन्मनि जन्मान्तरे वा कायिकवाचिक-सांसर्गिक ज्ञाताज्ञात स्पर्शास्पर्श आसन-शयन भोजन गमनादि कृत दोष निरसनद्वारा विविध तापोपशमनार्थ श्रीपरमेश्वर प्रीत्यर्थं देहशुध्यर्थम् इमां गां रुद्रदैवत्यां (तन्मूल्योपकल्पित अमुक द्रव्यममुक दैवतम्) अमुक गोत्राय अमुक शर्मणे सुपूजिताय ब्राह्मणाय गोदानत्वेन तुभ्यमहं सम्प्रददे। तत्सन्न मम।

प्रार्थना- ॐ कपिले सर्वदेवानां पूजनीयाऽसि रोहिणी ।
सर्वदेवमयी यस्मादतः शान्तिं प्रयच्छ मे ।।

दानप्रतिष्ठा-ॐ अद्य कृतैतत् गोदानप्रतिष्ठा सांगता सिद्ध्यर्थं अमुकद्रव्यं अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय सुपूजिताय तुभ्यमहं सम्प्रददे । ॐ तत्सन्न मम ।

अनि ब्राह्मणले-ॐ कोदात् कस्माऽअदात् कामोदात् कामायादात् ।
कामो दाता कामः प्रतिग्रहीता कामै तत्ते ।

यति पढेर यजमानलाई अभिषेक गरिदिनु ।

संकल्पः -हरि ॐ तत्सत् ३ ॐ विष्णुः ३ अद्य पूर्वोक्त सङ्कल्पसिद्धिरस्तु मम इह जन्मनि जन्मान्तरे वा कायिक-वाचिक-मानसिक-सांसर्गिकज्ञाताज्ञात -

स्पर्शाऽश्पर्शासन-भोजनगमनादिकृतदोषनिरसनद्वारा
दीपकलशगणेशपूजनपूर्वकश्रीसाम्बसदाशिवपूजनमहं करिष्ये ।

दीपम्- ॐ स्थिरो भव व्वीड्वङ्गऽआशुर्भववाज्यर्वन् ।
पृथुर्भव सुखद स्त्वमग्नेः पुरीषवाहणः ।।

अब दीयो बाल्नु ।

पूजनम्- ॐ पृष्ठोदिवि पृष्ठोऽअग्निः पृथिव्याम्पृष्ठोऽओषधीराविवेश।
वैश्वानरः सहसा पृष्ठोऽअग्निः सनोदिवा सरिषस्पातु नक्तम्।।

यस मन्त्रले दीयोको पूजा गर्नु ।

प्रार्थना- ॐ नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरो रुबाहवे।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटी युगधारिणे नमः।।

अब कलश पूजामा-पहिले फूल अक्षताले भूमिमा छुनु ।

मन्त्रः-ॐ भूरसि भूमिरस्य दितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री।
पृथिवीं यच्छपृथिवीं दृꣳह पृथिवीं माहिꣳसीः ।।

धान्यम्- ॐ धान्यमसि धिनुहि देवान् प्राणायत्वा दानायत्वा व्यानायत्वा।
दीर्घामनुप्रसितिमायुषे धान्देवोवः सविता हिरण्यपाणिः
प्रतिगृभ्णणा त्वच्छिद्रेण पाणिना चक्षुषेत्वा महीनाम्पयोसि।।

यस मन्त्रले धानमा छुनु ।

कलशस्थापनम्-ॐ आजिघ्रकलशं मह्यात्वा विशन्त्वित्वन्दवः ।
पुनरूर्जा निवर्तस्वसानः सहस्रन्धुक्ष्वोरु धारा पयस्वतीः
पुनर्म्मा विशताद्रयिः ।।

यस मन्त्रले कलश धानमाथि राख्नु ।

कलशे तीर्थादिजलम्-ॐ वरुणस्योत्तम्भनमसि वरुणस्यस्कम्भसर्जनीस्थो
वरुणस्यऽऋतसदनमसि वरुणस्यऽऋतसदनमासीद ॥

[१]सर्वौषधी- याऽओषधीः पूर्वाजातादेवेभ्यस्त्रियुगं पुरा ।
मनैनुबभ्रूणा महꣳशतन्धामानि सप्त च ॥

यस मन्त्रले सर्वौषधी चढाउनु ।

पूगीफलम्- ॐ याः फलिनीर्याऽअफलाऽअपुष्पायाश्च पुष्पिणी । बृहस्पति
प्रसूतास्तानो मुञ्चत्वꣳ हसः ॥ यसले सुपारी चढाउनु।

पंचरत्नानि- ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत्।
सदाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम॥

यस मन्त्रले पंचरत्न चढाउनु ।

१. मुरा, जटामसी, कुष्ठ, शिलाजीत, बेसार, सुठो, चम्पक, मुस्ता- यी सर्वौषधी कहिन्छन्। यी सात स्थानको माटोलाई सप्तमृतिका भनुछन् ।

गन्धम्- ॐ ओषधयः समवदन्त सोमेन सहराज्ञा ।
यस्मै कृणोतु ब्राह्मणस्त्वँराजन् पारयामसि । यसले चन्दन चढाउनु ।

दूर्वा- ॐ काण्डात् काण्डात् प्ररोहन्ती परुषः परुषस्परि ।
एवानो दुर्वे प्रतनुसहस्रेण शतेन च ।। यस मंत्रले दूबो चढाउनु ।

[1]सप्तमृत्तिका-ॐ स्योना पृथिविनो भवानृक्षरा निवेशनि ।
यच्छानः शर्मसप्रथा । यस मन्त्रले सप्तमृत्तिका र माटो चढाउनु ।

[2]पंचपल्लवैस्तन्मुखमाच्छाद्य- ॐ अश्वत्थेवोनिषदनं पर्णोवोवसतिष्कृता।
गोभाजऽइत्किला सथयत्स नवथ पूरुषम् । यसले पंचपल्लव चढाउनुं।

---

(१) अश्वशाला, हात्तीसार, सर्पको प्वाल, नदीको संगम, तलाऊ, राजद्वार र गोशाला ।
(२) वर, गूलर, पीपल, आँप र पाकरी–यी-यी पंच पल्लव कहिन्छन् ।
यी सात स्थानको माटोलाई सप्तमृत्तिका भन्दछन् ।

वस्त्रम्- बृहस्पतेऽ अतियदर्योऽ अर्हाद्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदयच्छवसऽऋतप्रजा ततदस्मा सुद्रविणन्धेहि चित्रम्।।

यस मन्त्रले कलशमा वस्त्र चढाउनु ।

वरुणपूजनम्-तत्त्वायामि ब्रह्मणा वन्दमानस्तदासास्ते यजमानो हविर्भिः।
अहेडमानो वरुणे हवोध्युरुषꣳसमानऽआयुः प्रमोषीः।

यस मन्त्रले वरुणको पूजा गर्नु ।

कलशाभिमन्त्रणम्-कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः।
मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः।।
कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा ।
ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ।।
अंगैश्च सहिताः सर्वे कलशं तु समाश्रिताः।

प्रार्थना- देव - दानवसंवादे मथ्यमाने महोदधौ ।
उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥
त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ।
त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः॥
शिव स्वयं त्वमेवाऽसि विष्णुस्त्वं च प्रजापतिः ।
आदित्या वसवो रुद्रा विश्वेदेवा सपितृकाः ॥
त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ।
त्वत्प्रसादादिमं यज्ञं (पूजां) कर्तुमीहे जलोद्भव ॥
सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा ॥

गणेश पूजा–

आवाहनम्–ॐ गणानान्त्वा गणपतिꣳ हवामहे प्रियाणान्त्वा प्रियपतिꣳहवामहे निधीनान्त्वा निधिपतिꣳहवामहे वसो मम। आहमजानिगर्भधमा त्वमजासि गर्भधम् ॥

हे हेरम्ब ! त्वमेह्येहि अम्बिका त्र्यम्बिकात्मज ।
सिद्धिबुद्धिपते त्र्यक्ष लक्षलाभयुतः शिवः ॥
नागस्य नागहारस्त्वं गणराजः चतुर्भुज !
भूषितैः स्वायुधैर्दिव्यैः पाशांकुशपरश्वधैः ॥
आवाहयामि पूजार्थं रक्षार्थं च मम क्रतोः ।
इहाऽऽगत्य गृहाण त्वं पूजां कर्तुं च रक्षमाम् ॥

आसनम्- ॐ पुरुषऽएवेदꣳसर्वं यद्भूतं यच्चभाव्यम् ।
उतामृतत्व स्येशानो यदन्नेनातिरोहिति ॥
अनेकरत्नसंयुक्तं नानामणिगणान्वितम् ।
इदं हेममयं दिव्यमासनं प्रतिगृह्यताम् ॥

यस मन्त्रले गणेशजीलाई कुशको आसन दिनू ।

पाद्यम्- ॐ एतावानस्य महिमातो ज्यायाँश्च पूरुषः ।
पादोस्यविश्वा भूतानि त्रिपादस्या मृतन्दिवि ॥
गंगोदकं निर्मलं च सर्वसौगन्धसंयुतम् ।
पादप्रक्षालनार्थाय दत्तं मे प्रतिगृह्यताम् ॥

यस मन्त्रले जल चढाउनु ।

अर्घ्यम्- ॐत्रिपादूर्ध्वऽ उदैत्पुरुषः पादोस्येहा भवत्पुनः ।
ततो विष्वङ् व्यक्रामत्सा शना नसनेऽअभि ।।
गन्धपुष्पाक्षतैर्युक्तमर्घ्यं सम्पादितं मया ।
गृहाण भगवन् शम्भो ! प्रसन्नो भव सर्वदा ।।
यस मन्त्रले गणेशजीलाई अर्घ्य चढाउनू ।

आचमनीयम्- ॐ ततो विराडजायत विराजोऽअधिपूरुषः ।
सजातोऽअत्यरिच्यत पश्चाद्भूमिमथोपुरः ।।
यस मन्त्रले पुनः जल चढाउनू ।

स्नानम्- ॐ तस्मादश्वाऽअजायन्त येके चोभयादतः ।
गावोहजज्ञिरे तस्मात् तस्मात्जाताऽअजावयः ।।
यस मन्त्रले गणेशजीलाई स्नान गराउनू ।

यज्ञोपवीतम्- ॐ तस्माद्यज्ञात् सर्वहुतः सम्भृतं पृषदाज्यम् ।
पशूँस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ॥
यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् सहजं पुरस्तात् ।
आयुष्यम ग्रयं प्रतिमुञ्च शुभ्रं ययज्ञोपवीतं बलमस्तु तेजः॥

यस मन्त्रले जनै चढाउनू ।

चन्दनम्- ॐ तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः ।
तेन देवाऽअयजन्त साध्याऽऋषयश्च ये ॥
श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।
विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम् ॥

यस मन्त्रले गणेशजीलाई चन्दन चढाउनू ।

पुष्पमाला- ॐ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्यासीत् किंबाहूकिमुरूपादाऽउच्येते ॥
माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो !
मयाऽऽहृदानि पुष्पाणि गृहाण परमेश्वर! ॥
यस मन्त्रले फूल-मालाहरू चढाउनू ।

धूपम् - ॐ ब्राह्मणोस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत ॥
वनस्पतिरसोदभूतो गन्धाढ्यो गन्ध उत्तमः ।
आघ्रयः सर्व देवानां धूपोऽयं प्रतिगृह्यताम् ॥
यस मन्त्रले धूप बाल्नू ।

दीपम् - ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्य्योऽअजायत ।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥
साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ।
दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् ॥
यस मन्त्रले गणेशजीलाई बत्ती देखाउनू ।

नैवेद्यम्- ॐ नाभ्याऽआसीदन्तरिक्ष‌ꣳशीर्ष्णोद्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ २ अकल्पयन् ॥
शर्करा खण्डखाद्यानि दधिक्षीर-घृतानि च ।
आहारं भक्ष्य-भोज्यं च नैवेद्यं प्रतिगृह्यताम् ॥
यस मन्त्रले गणेशजीलाई नैवेद्य चढाउनू ।

दक्षिणा- ॐ यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोस्यासीदाज्यङ्ग्रीष्मऽइध्मः शरद्धविः ॥
हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥

यस मन्त्रले गणेशजीलाई दक्षिणा चढाउनू ।

प्रदक्षिणा- ॐ सप्तास्यासन् परिधयस्त्रिः सप्तसमिधः कृताः
देवा यद्यनन्तन्वानाऽअबध्नन् पुरुषं पशुम् ॥
यानि कानि च पापानि जन्मान्तरकृतानि च ।
तानि सर्वाणि नश्यन्तु प्रदक्षिणपदे पदे ॥

यस मन्त्रले प्रदक्षिणामा जलले घुमाउनू ।

नमस्कार:- ॐ नमः सर्वहितार्थाय जगदाधारहेतवे ।
साष्टांगोऽयं प्रणामस्ते प्रयत्नेन मया कृतः ॥
रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षकः ।
भक्तानामभयं कर्ता त्राता भव भवार्णवात् ।
द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो !
वरदस्त्वं वरं देहि वांछितं वांछितार्थद !
अनेन फलदानेन सफलोऽस्तु सदा मम ॥

प्रार्थना- वक्रतुण्ड महाकाय सूर्य्यकोटिसमप्रभ ।
निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥

यति भनेर गणेशजीलाई दण्डवत् प्रणाम गर्नु । अनि फूल-अक्षता र चन्दन मुछेर कलशको मुखमा पूजा गर्दै जानू- ॐ गणपत्यादि पाञ्चायनेभ्यो नमः । ॐ विनायकादि

पञ्चलोकपालेभ्यो नमः । ॐ आदित्यादि नवग्रहेभ्यो नमः । ॐ ईश्वराद्यधिदेवेभ्यो नमः । ॐ अग्न्यादि प्रत्यधिदेवेभ्यो नमः । ॐ इन्द्रादिदशदिक्पालेभ्यो नमः । ॐ वीरभद्रादिएकादशरुद्रेभ्यो नमः । ॐ गौर्यादिषोडशमातृभ्यो नमः । ॐ आवहादिसप्तमरुद्भ्यो नमः । ॐ विनायक-ब्रह्म-विष्णु-रुद्रार्कवनस्पतिभ्यो नमः । ॐ इष्टदेवताभ्यो नमः । ॐ ग्राम-देवताभ्यो नमः । ॐ स्थापितदेवताभ्यो नमः ।

धूपम्- ॐ ब्राह्मणोऽस्य मुखमासीद् बाहूराजन्यः कृताः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यांशूद्रोऽअजायत ॥
वनस्पति रसोद्भूतो गन्धाढ्यो गन्धउत्तमः ॥
आघ्रेयः सर्व देवानां धूयोऽयं प्रतिगृह्यताम् ॥

यस मन्त्रले दीप कलश-गणेशलाई धूप देखाउनू ।

दीपम्- ॐ चन्द्रमा मनसो जातश्चक्षोःसूर्य्योऽअजायत।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥

यस मन्त्रले दीप-कलश-गणेशलाई बत्ती देखाउनू ।

नैवेद्यम्- ॐ नाभ्याऽआसीदन्तरिक्षꣳशीर्ष्णोद्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ २ अकल्पयन्॥
शर्करा खण्डखाद्यानि दधि-क्षीर-घृतानि च ।
आहारं भक्ष्यभोज्यं च नैवेद्यं प्रतिगृह्यताम् ॥

दीप कलश गणेश पूजा समाप्त भयो ।

अब शिव-पार्वतीको पूजामा पहिले कर्मपात्रबाट तीन टुक्रा कुश लिएर पूजाको संकल्प गर्नू -

संकल्पः- हरिः ॐ तत्सत् ३ ॐ विष्णुः ३ अद्य पूर्वोक्त संकल्पसिद्धिरस्तु मम श्रुति-स्मृति-पुराणोक्तफलप्राप्त्यर्थम् इह जन्मनि जन्मान्तरे वा भर्त्रा सह अखण्डसौभाग्यसन्तत्याद्यभीष्टप्राप्तये चतुर्विध-पुरुषार्थसिध्यर्थं श्रीउमामहेश्वरदेवताप्रीत्यर्थं हरितालिका व्रतांगत्वेन श्रीसाम्बसदाशिवपूजनमहं करिष्ये ।

यसपछि तीन टुक्रा कुशले आफूलाई र सामग्रीलाई जल छर्कनू ।

ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपिवा ।
यः स्मरेत् पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिः ॥

आवाहनम्- ॐ मन्दारमाला कुलितालकायै कपालमालांकितशेखराय।
दिव्याम्बरायै च दिगम्बराय नमः शिवायै च नमः शिवाय॥
ध्यायेन्नित्यं महेशं रजतगिरनिभं चारुचन्द्रावतंसं,

रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवरा भीतिहस्तं प्रसन्नम् ।
पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं,
विश्वाद्यं वीश्वबीजं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥
आगच्छ भगवन् देव ! स्थाने चात्र स्थिरो भव ।
यावत् पूजां करिष्येऽहं तावत् त्वं सन्निधौ भव ॥
श्री उमामहेश्वराभ्यां नमः भनेर बेलपत्रको आसन राखिदिनू।

आसनम्- अनेकरत्नसंयुक्तं नाना मणिगणान्वितम् ।
इदं हेममयं दिव्यमासनं प्रतिगृह्यताम् ॥
भजामि त्वां महादेवि सर्वसौभाग्यदायिनी ।
अनेकरत्नसंयुक्तमासनं प्रतिगृह्यताम् ॥
श्रीउमामहेश्वराभ्या नमः आसनं समर्पयामि- भनेर कुशको आसन दिनू ।

पाद्यम्- गङ्गोदकं निर्मलं च सर्वसौगन्ध्यसंयुतम् ।
पादप्रक्षालनार्थाय दत्तं मे प्रतिगृह्यताम् ।।
निर्मलं शीतलं दिव्यं नानागन्धैः समन्वितम् ।
पाद्यं गृहाण देवेशि मया दत्तं हि भक्तितः ।।
श्रीउमामहेश्वराभ्यां नमः पाद्यं समर्पयामि भनेर जल चढाउनू ।

अर्घ्यम्- गन्धपुष्पाक्षतैर्युक्तमर्घ्यं सम्पादितं मया ।
गृहाण भगवन् देव प्रसन्नो वरदो भव ।।
श्रीपार्वती महाभागे शंकर प्रियवादिनी ।
अर्घ्यं गृहाण कल्याणि भर्त्रा सह पतिव्रते ।।
श्री उमामहेश्वराभ्यां नमः अर्घ्यं समर्पयामि
भनेर अर्घको जल चढाउनू ।

आचमनीयम्- कर्पूरेण सुगन्धेन वासितं स्वादु शीतलम् ।

तोयमाचमनीयार्थं　गृहाण　परमेश्वर ॥
गंगाजलं मयानीतं　सुवर्णकलशे स्थितम् ।
अनेनाचम्यतां देवि रुद्रेण सहितेऽनघे ॥
श्रीउमामहेश्वराभ्यां नमः भनेर आचमन जल चढाउनू ।

स्नानम्- मन्दाकिन्यास्तु यद्वारि सर्वपापहरं शुभम् ।
तदिदं कल्पितं देव! स्नानार्थं प्रतिगृह्यताम् ॥
गंगा-सरस्वती-रेवा-पयोष्णी-नर्मदाजलैः ।
स्नापितासि मया देवि तेन शान्तिं कुरुष्व मे ॥
श्रीउमामहेश्वराभ्यां नमः स्नानं समर्पयामि भनेर स्नान गराउनू।

दुग्धस्नानम्- कामधेनुसमुद्भूतं सर्वेषां जीवनं परम् ।
पावनं यज्ञहेतुश्च पयः स्नानाय गृह्यताम् ॥

सुरभिस्तनसम्भूतं सर्वदेवप्रियं पयः ।
स्नानार्थं ते यथाभक्त्या दत्तं स्वीक्रियतामिति ।।
श्रीउमामहेश्वराभ्यां नमः भनेर दूधले स्नान गराउनू । फेरि शुद्ध जलले स्नान गराउनू ।

दधिस्नानम्- पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् ।
दध्यानीतं मया देव स्नानार्थं प्रतिगृह्यताम् ।।
चन्द्रमण्डलसंकाशं सर्वदेवप्रियं दधि ।
अनेन स्नापितासि त्वं तेन शान्तिं कुरुष्व मे ।।
श्री उमामहेश्वराभ्यां नमः भनेर दही स्नान गराई शुद्ध जल चढाउनू।

घृतस्नानम्- नवनीतसमुत्पन्नं सर्वसन्तोषकारकम् ।
घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् ।।

आज्यं गृहाणसुराणामाज्यं यज्ञे हविर्ध्रुवम् ।
आज्यं गृहाण स्नानाय मया तुभ्यं निवेदितम् ।
श्रीउमामहेश्वराभ्यां नमः भनेर घिउले स्नान गराई शुद्ध जल दिनू ।
मधुस्नानम्–पुष्परेणु समुत्पन्नं सुस्वादु मधुरं मधु ।
तेजः पुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥
सर्वौषधिसमुत्पन्नं पीयूषमधुरं मधु ।
स्नापनाय मया दत्तं गृहाण जगदम्बिके ॥
श्रीउमामहेश्वराभ्यां नमः भनेर महले स्नान गराई शुद्ध जल दिनू ।
शर्करास्नानम्- इक्षुसारसमुद्भूतां शर्करां पुष्टिदां शुभाम् ।
मलापहारिकां दिव्यां स्नानार्थं प्रतिगृह्यताम् ॥

इक्षुदण्ड समुद्भूता शर्करा मधुरा विभो !
स्नानार्थं ते मया दत्ता गृहाण परमेश्वरि ॥
श्रीउमामहेश्वराभ्यां नमः भनेर शक्करले स्नान गराई शुद्ध जल दिनू ।
गन्धोदकम्- मलयाचलसंभूतं चन्दनेन विमिश्रितम् ।
इदं गन्धोदकस्नानं कुंकुमाक्तं नु गृह्यताम् ॥
नमो देव्यै महादेव्यै शिवायै सततं नमः ।
नमः प्रकृत्यै भद्रायै नियताः प्रणताःस्म ताम् ॥
श्री उमामहेश्वराभ्यां नमः भनेर चन्दन मिसाएको जल चढाउनू ।
चन्दनम्- मलयाचलसम्भूतं चन्दनेन विमिश्रितम् ।
श्रीखण्डं चन्दनं दिव्यं गृह्यतां परमेश्वरि ॥

मलयाचलसंभूतं धनसारं मनोहरम् ।
हृदयानन्ददं चारु चन्दनं प्रतिगृह्यताम् ।।

अक्षतान्- अक्षताश्च सुरश्रेष्ठः कुंकुमाक्ता सुशोभिताः ।
गृहाण देवदेवेशि मया दत्ता हि भक्तितः ।।
श्रीउमामहेश्वराभ्यां नमः भनेर अक्षता चढ़ाउनू ।

वस्त्रम्- शीतवातोष्णसन्त्राणं लज्जाया रक्षणं परम् ।
देहालंकरणं वस्त्रं धृत्वा शान्तिं प्रयच्छ मे ।।
श्रीउमामहेश्वराभ्यां नमः भनेर वस्त्र चढाई शुद्ध जल चढाउनू ।

यज्ञोपवीतम्- नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् ।
उपवीतं मया दत्तं गृहाण परमेश्वर ।।
श्रीउमामहेश्वराभ्यां नमः भनेर शिवजीलाई जनै चढाउनू।

पुष्पाणि- माल्यादीनि सुगन्धीनि मालत्यादीनि भक्तितः ।
मयाऽऽहृतानि पुष्पाणि गृहाण परमेश्वर ॥
नानाविधानि पुष्पाणि माल्यादीनि सुगन्धि वै ।
मयाऽऽहृतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम् ॥
श्रीउमामहेश्वराभ्यां नमः भनेर फूल र मालाहरू चढाउनू।

धूपम्- वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥
श्रीउमामहेश्वराभ्यां नमः भनेर धूप बालिदिनू ।

दीपम्- साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ।
दीपं गृहाण देवेश ! त्रैलोक्यतिमिरापहम् ॥
श्रीउमामहेश्वराभ्यां नमः भनेर बत्ती बाली आरती गरिदिनू ।

नैवेद्यम्- शर्करा खण्डखाद्यानि दधि-क्षीर-घृतानि च ।
आहारं भक्ष्यभोज्यं च नैवेद्यं प्रतिगृह्यताम् ॥
नैवेद्यं गृह्यतां देवि! भक्तिं मे ह्यचलां कुरु ।
ईप्सितं मे वरं देहि परत्र च परां गतिम् ॥
श्रीउमामहेश्वराभ्यां नमः भनेर नैवेद्यहरू चढाउनू ।

ऋतुफलम्- इदं फलं मया देव स्थापितं पुरतस्तव ।
तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥
श्रीउमामहेश्वराभ्यां नमः भनेर फल चढाउनू ।

कुंकुमाभरण्-हरिद्रा पीतवर्णा च सर्वसौभाग्यदायिनी ।
श्रद्धया अर्चिता देवि! सन्तुष्टा मेऽस्तु सर्वदा ॥
कुंकुमं कामदं दिव्यं कामिनां कायसम्भवम् ।

कुंकुमेनार्चिता देवि वरदा भव सर्वदा ॥
कण्ठसूत्रं ताडसूत्रं हरिद्रां कुंकुमाञ्चनम् ।
सिन्दूरादिप्रदास्यामि तेन सौभाग्यदा भव ॥
सेवन्तिका - बकुल - चम्पक - पाटलाब्जैः ।
पुन्नागजाति-करबीर-रसालपुष्पैः ॥
बिल्व-प्रवाल-पुलसीदल-मल्लिकाभिः ।
त्वां पूजयामि जगदीश्वरि मे प्रसीद॥

**श्री उमामहेश्वराभ्यां नमः** भनेर पार्वतीजीलाई बेसार (बकुवा) ताडपत्र, कुंकुम, सिन्दूर आदि नाना सौभाग्य द्रव्यहरू चढाउनू ।

ताम्बूलम्- पूगीफलं महद्दीव्यं नागवल्लीदलैर्युतम् ।
एलालवंगसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ।।
श्री उमामहेश्वराभ्यां नमः भनेर पान-सुपारी आदि चढाउनू।

दक्षिणा- हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ।।
श्रीउमामहेश्वराभ्यां नमः भनेर दक्षिणा द्रव्य चढाउनू ।

आरती- कदलीगर्भसम्भूतं कर्पूरं सुप्रदीपितम् ।
आरार्तिकमहं कुर्वे पश्य मां वरदो भव ।।
चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च ।
त्वमेव सर्वज्योतींषि आर्तिक्यं प्रतिगृह्यताम् ।।
श्रीउमामहेश्वराभ्यां नमः भनेर उभिई आरती गर्नु र कपूर बाल्नू ।

प्रदक्षिणा- यानि कानि च पापानि जन्मान्तरकृतानि च ।
तानि सर्वाणि नश्यन्तु प्रदक्षिणपदे पदे ।।
श्रीउमामहेश्वराभ्यां नमः भनेर हातमा जल लिई तीनपल्ट घुमाउनू ।
नमस्कारः-नमः सर्वहितार्थाय जगदाधारहेतवे ।
साष्टाङ्गोऽयं प्रणामस्ते प्रयत्नेन मया कृतः ।।
श्रीउमामहेश्वराभ्यां नमः भनेर नमस्कार प्रणाम गर्नु ।
अर्घ्यम्- गन्धाक्षतसमायुक्तं फल-पुष्पसमन्वितम् ।
हिरण्यसहितं देवि अर्घ्यं मे प्रतिगृह्यताम् ।।१।।
हिमालयसुते देवि सर्वसौभाग्यदायिनी ।
मया समर्पितं तुभ्यमर्घ्यं सम्प्रति गृह्यताम् ।।२।।
सर्वदेवस्तुते देवि दुःखदैन्यविनाशिनि ।

भक्त्या दत्तं मया तुभ्यमर्घ्यं स्वीक्रियतामिति ।।३।।
श्रीउमामहेश्वराभ्यां नमः भनेर मन्त्रले तीनपल्ट अर्घ दिनू ।
वायनम्- वायनं फलं संयुक्तं सघृतं दक्षिणान्वितम् ।
वर्यद्विजेभ्यो दास्यामि व्रतसम्पूर्तिहेतवे ।।
अन्नं सुवर्णपात्रस्थं सवस्त्र-फल-दक्षिणम् ।
वायनं गौरि विप्राय ददामि प्रीतये तव ।।
सौभाग्यारोग्य कर्तृनां सर्वसम्पत्समृद्धये ।
गौरीगिरीशतुष्ट्यर्थं वायनं ते ददाम्यहम् ।।
श्रीउमामहेश्वराय नमः भनेर वायन ब्राह्मणलाई दिनू ।
भूयसी दक्षिणा- हरिः ॐ तत्सत् ३ ॐ विष्णु ३ पूर्वोक्त संकल्प सिद्धिरस्तु कृतस्य हरितालिका व्रतस्य न्यूनातिरिक्त परिपूर्णार्थं इमां भूयसीं दक्षिणां

यद्द्रव्यं तद् दैवताकं नानानामगोत्रेभ्यो नानानामशर्मभ्यो ब्राह्मणेभ्यो यथाभागं विभज्य यथा कालेन दातुमहमुत्सृजेत्।

यति भनेर दक्षिणाको दुना कर्मपात्रमा राख्नु र पछिबाट ब्राह्मणहरूलाई दिनू ।

विसर्जन-ॐ प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु च ।
स्मरणादेव तद्विष्णोः सम्पूर्ण स्यादिति श्रुतिः ॥'
आवाहनं न जानामि न जानामि विसर्जनम् ।
पूजां चैव न जानामि क्षम्यतां परमेश्वरि ॥
पुत्रान् देहि धनं देहि सौभाग्यं देहि सुव्रत ।
अन्यांश्च सर्वकामांश्च देहि देवि नमोऽस्तुते ॥

भक्त्या कृतं तु यद्देवि पूजनं तव सुव्रते ।
तत्सर्वं पूर्णतां यातु त्वत्प्रसादात् सुरेश्वरि ॥
यस्य स्मृत्या च नामोक्त्या पूजा-यज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥

यति भनेर ॐ कायेन वाचा मनसेन्द्रियैर्वा०' मन्त्र पढी भूमिमा जल छाडिदिनू । अनि, तीनपल्ट ॐ अच्युताय नमः ३ भनेर हात जोड्नु ।

**अभिषेक-** यति सकिएपछि हरितालिका व्रत-पूजा समाप्त भयो । अब पुरोहितले कलशको जल कर्पपात्रमा हालेर पूजा गर्ने यजमानलाई परिवारसहित वैदिक मन्त्रले अभिषेक गर्नुपर्दछ –

**मन्त्रः-** ॐ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः
शान्तिरोषदयः शान्तिः । वनस्पतयः शान्तिर्विश्वेदेवाः

शान्तिर्ब्रह्मशान्तिः सर्वᳪंशान्तिः शान्तिदेव शान्तिः सामाशान्तिरेधि ।।१।। ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतं श्रृणुयाम शरदः शतम्प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतात् । ॐ स्वस्तिनऽइन्द्रो वृद्धश्रवाः स्वस्तिनः ।। पूषा विश्ववेदाः स्वास्तिनस्ताक्ष्योऽअरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ।। ॐ विश्वानिदेव सवितर्दुरितानि परासुव । यद्भद्रन्तन्नऽआसुव ।।

ॐ सरितः सागराः शैलास्तीर्थानि जलदा नदाः ।
एतेत्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ।।

यति मन्त्रहरू पढेर जल छर्किदिनू ।

प्रसाद- ॐ आब्रह्मन् ब्रह्माणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः

शूरऽइषव्योतिव्याधी महारथो जायतान्दोग्ध्री धेनुर्वोढा नड्वानाशु: सप्तिः पुरन्धिर्योषाजिष्णूरथेष्ठाः सभेयो युवास्य यजमानस्य वीरोजायतान्निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो नऽओषधयः पच्यन्तांयोगक्षेमोनः कल्पताम् ।। ॐ पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः ।। घृतेनत्वं तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामाः स्वस्ति ।।ॐ श्रीर्वर्चस्वमायुष्य माभिधात्छोभमानं महीयते ।। धनं धान्यं पशून् बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः । यी सबै मन्त्रहरू पढेर पुरोहितले पूजा गर्ने यजमानलाई फूल-प्रसाद लगाइदिनू र भन्नू –

ॐ सिद्धिरस्तु क्रियारम्भे वृद्धिरस्तु धनागमे ।
पुष्टिरस्तु शरीरेषु शान्तिरस्तु गृहादिषु ।।

इति हरितालिका पूजाविधिः समाप्तः ।

# हरितालिका व्रत-कथा प्रारम्भः

सूत उवाच-

मन्दारमाला कुलितालकायै कपालमालांकितशेखराय ।
दिव्याम्बरायै च दिगम्बराय नमः शिवायै च नमः शिवाय॥१॥

पूर्वकालमा नैमिषारण्य नामक पवित्र क्षेत्रमा तपस्या नै धन भएका शौनकादि अठासी हजार ऋषिहरू धेरै समयमा सकिने कुनै यज्ञ आरम्भ गरिरहेका थिए, त्यसै अवसरमा वेदव्यासका मनपरेका शिष्य जसलाई व्यासजीले सबै शास्त्रमा निपुण तुल्याएका थिए, तिनै सूतजी भ्रमण गर्दै नैमिषारण्यमा आइपुगे । शौनकादि ऋषिहरूले पौराणिक सूतजीलाई आउन लागेका देखेर सादर ल्याई पूजा गरेर सिंहासनमा बसालेर सोधे- हे सूतजी हामीलाई थोरै श्रम र न्यून धनले ठूलो धर्म पाइने कुनै व्रत कथा भन्नुहवस् ।

सूतजी भन्नुहुन्छ - जुन गौरीका औंठी झैं बटारिएका अलक कपालरूपी कल्पवृक्षका पुष्पले ढाकिएको छ र उत्तम नवीन वस्त्र धारण गर्ने भएकी कमलका मालाले शोभयमान दिगम्बर रूपधारी शंकरलाई नमस्कार छ ॥१॥

कैलाश शिखरे रम्ये गौरी पृच्छति शंकरम् ।
गुह्याद् गुह्यतरं गुह्यं कथयस्व महेश्वर ॥२॥
सर्वेषां सर्वधर्माणामल्पायासं महत्फलम् ।
प्रसन्नोऽसि यदा नाथ तथ्यं ब्रूहि ममाग्रतः ॥३॥

---

कैलाश पर्वतको उत्तम टाकुरामा निवास गर्ने आफ्ना स्वामी शंकर भगवान्सित एक दिन गौरीले सोध्नुभयो- हे नाथ ! मलाई अत्यन्त गुप्त तथा थोरै धन र श्रमले ठुलो पुण्य पाइने व्रत-कथा आज्ञा हवस् ॥२॥ हे नाथ ! हजुर मदेखि खुसी हुनुहुन्छ भने धर्मको सार अंश र जसको उपासनामा धन र श्रम थोरै लागोस् अनि विशेष उत्तम फल पनि प्राप्त हवस् ॥३॥ एउटा अर्को कुरा- म यो पनि जान्ने इच्छा राख्दछु- म कुन व्रतको फलले वा प्रभावले

केन त्वं हि मया प्राप्तस्तपोदानव्रतादिना !
आदिमध्यान्तरहितो भर्ता चैव जगत्प्रभुः ॥४॥

ईश्वर उवाच-

श्रृणु देवि प्रवक्ष्यामि तवाग्रे व्रतमुत्तमम् ।
यद्गोप्यं मम सर्वस्वं कथयामि तव प्रिये ॥५॥

---

यस्ती हुन पाएँ । हे जगदीश्वर ! हजुर आदि, मध्य र अन्त्यबाट रहित हुनुहुन्छ । यस्ता ईश्वर हजुरलाई मैले कुन दान-धर्मले प्राप्त गरें ॥४॥

आफ्नी प्रियतमा पार्वतीको यस्तो प्रश्न सुनेर भगवान शंकर आज्ञा गर्नुहुन्छ- हे भद्रे! अब तिमी त्यो कथा सुन, जुन मेरो सर्वस्व हो, त्यही म भन्दछु ॥५॥ आकाशमा जस्तै ताराहरूमा चन्द्रमा, नवग्रहहरूमा आदित्य, चारैवर्णमा प्रधान ब्राह्मण, सबै देवताहरूमा

यथा चोडुगणे चन्द्रो ग्रहाणां भानुरेव च ।
वर्णानां च यथा विप्रो देवानां विष्णुरेव च ॥६॥
नदीनां च यथा गङ्गा पुराणानां च भारतम् ।
वेदानां च यथा साम इन्द्रियाणां मनो यथा ॥७॥
पुराणवेदसर्वस्वमागमेन यथोदितम् ।
श्रृणुष्वेकाग्रमनसा व्रतं श्रेष्ठं पुरातनम् ॥८॥

---

विष्णु भगवान् ॥६॥ जस्तै नदीहरूमा गंगाजी, समस्त पुराणहरूमा महाभारत, चारै वेदमा सामवेद र इन्द्रियहरूमा श्रेष्ठ मन ॥७॥ जुन प्रकारले उत्तम र श्रेष्ठ कहिन्छ, त्यस्तै पुराण भनेको वेदहरूको सर्वस्व हो, यो कुरा समस्त शास्त्रले स्वीकार गरेका छन्, अतः अब तिमी एक चित्त भएर मैले भनेको सुन ॥८॥ जुन व्रतको शक्ति वा प्रभावले तिमीले

येन व्रतप्रभावेण प्राप्तमर्द्धासनं मम ।
तत्सर्वं कथयिष्येऽहं त्वं च मे प्रेयसी यतः ॥९॥
भाद्रे मासि सिते पक्षे तृतीया हस्तसंयुता ।
मदनुष्ठानमात्रेण सर्व पापैः प्रमुच्यते ॥१०॥
श्रृणु देवि त्वया पूर्वं यद्व्रतं विहितं महत् ।
तत्सर्वं कथयिष्यामि यथावृत्तं हिमालये ॥११॥

मलाई पतिरूपमा प्राप्त गर्न समर्थ भयौ र मेरो अर्धासन पनि प्राप्त गर्‍यौ । तिमी मेरी अत्यन्त प्रिय छौ, त्यसैले म यथार्थ रूपमा वर्णन गर्दछु, तिमी सुन ॥९॥ भाद्रमासको शुक्लपक्षमा तृतीया तिथि जुन हस्त नक्षत्रले युक्त भएको छ, त्यसै दिन व्रतको अनुष्ठान गरे प्राणीमात्रका समस्त पाप भस्म भएर जान्छन् ॥१०॥ जुन व्रत तिमीले पिताको घर हिमालयमा पालन गरेकी थियौ, त्यसैको वृत्तान्त म तिमीलाई भन्दछु, एक चित्त भएर सुन ॥११॥ शिवको त्यस्ता वचन

पार्वत्युवाच-

कथं कृतं मया नाथ व्रतानामुत्तमं व्रतम् ।
तत्सर्वं श्रोतुमिच्छामि त्वत्सकाशान्महेश्वरः ॥१२॥

शिवउवाच-

अस्ति तत्र महान्दिव्यो हिमवान्नग उत्तमः ।
नानामणिसमाकीर्णो नानाद्रुमसमाकुलः ॥१३॥

---

सुनी पार्वती विन्ती गर्नुहुन्छ- हे प्रभो ! त्यो मैले कहाँ र कसरी गरेकी थिएँ, त्यो कुरा हे जगदीश्वर ! हजुरको मुखारविन्दबाट सुन्न इच्छा गर्दछु ॥१२॥ आफ्नी प्रियतमा पार्वतीको इच्छा जानेर महादेव आज्ञा गर्नुहुन्छ- हे मानिनी ! हिमालय नामको एउटा उत्तम र ठुलो गिरिराज छ । त्यो अनेक प्रकारका चीर आदि साना-ठूला वृक्षहरूले सुशोभित छ ॥१३॥ त्यहाँ अनेक थरिका पक्षीहरू आफ्ना सुमधुरस्वरले अनेक पथिकलाई आनन्द प्रदान गर्दछन् । साना

नाना पक्षिसमायुक्तो नानामृगविचित्रकः ।
यत्र देवाः सगन्धर्वा सिद्धचारणगुह्यकाः ॥१४॥
विचरन्ति सदा तुष्टा गन्धर्वा गीततत्परा ।
स्फटिकैः काञ्चनैः श्रृङ्गैर्मणिवैडूर्यभूषितैः ॥१५॥

---

ठूला मृग, सिंह व्याघ्र आदि बन्य जन्तुहरू निर्भय भएर त्यहाँ डुलिरहन्छन् । देवता, सिद्ध, गन्धर्व, चारण र गुह्यकहरू ॥१४॥ प्रसन्न मनले निर्भय भएर डुलिरहन्छन् । गन्धर्वहरू अनेक गीत गान गर्दै त्यहाँ आनन्दले विचरण गर्दछन् ॥१५॥ त्यस पर्वतमा स्फटिकका, वैदूर्य मणि र सुन चाँदीका अनेक उच्च श्रृङ्गहरू आफ्ना लामा बाहुले स्वच्छ आकाशमा लेख्न लागे झैं देखिन्छन् । तिनको स्पर्शले कुनै विनयी सखाले निज सखाको मन्दिर (घर)- लाई स्पर्श गरिरहेको आभास पार्दछ । त्यो हिउँले छोपिएको र भागीरथीको कल-कल ध्वनिले सदैव

भुजैर्लिखन्निवाकाशं सुहृदो मन्दिरं यथा ।
हिमेन पूरितो नित्यं गंगाध्वनिनादितः ॥१६॥
पार्वती त्वं यथा बाल्ये स्वाचरन्ती तपःपरम् ।
आब्दद्वादशकं देवि धूम्रपानमधोमुखी ॥१७॥
संवत्सरं चतुःषष्टिः पक्वपर्णाशनं कृतम् ।
माघमासे जले मग्ना वैशाखे चाग्निसेविनी ॥१८॥

प्रतिध्वनित भइरहन्छ ॥१६॥ हे प्रिये ! तिमीले बाल्यावस्थामा त्यही स्थानमा बाह्र वर्षसम्म निकै कठोर तपस्या गरेकी थियौ । अधोमुखी भएर तथा धूम्रपान गरेर दिन बितायौ ॥१७॥ त्यसपछि चौंसट्ठी वर्षपर्यन्त वृक्षबाट झरेका पाकेका पात खाएर तप गरेकी थियौ, पूष-माघको जाडोमा जलमा उभिएर तथा वैशाख-ज्येष्ठको महीनामा आगो तापेर तप गरेकी थियौ ॥१८॥

श्रावणं च वहिर्वासा अन्नपानविवर्जिता ।
दृष्ट्वा तातेन तत्कष्टं चिन्तया दुःखितोऽभवत् ॥१९॥
कस्मै देया मया कन्या एवं चिन्तातुरोऽभवत् ।
तदैवावसरे प्राप्तः ब्रह्मपुत्रस्तु धर्मवित् ॥२०॥
नारदो मुनिशार्दूलः शैलपुत्रीदिदृक्षया ।
दत्वाऽर्घ्यविष्टरौ पाद्यं नारदं प्रोक्तवान् गिरिः ॥२१॥

---

श्रावण- भाद्रमा खान-पान त्यागेर खुला मैदानमा अर्थात् कुनै छाया (ओत) नभएको चौरमा तप गरेकी थियौ । तिम्रा पिता हिमालय त्यसरी कष्ट खपेर तपस्या गरेको देखेर अत्यन्त व्याकुल भएका थिए ॥१९॥ अनि तिम्रा पिताले विचार गरे- यी तपस्विनी कन्या कसलाई सुम्पने हो ? त्यसै अवसरमा ब्रह्माजीका मानस पुत्र देवर्षि नारद तिमीलाई हेर्ने इच्छाले आए। हिमालयले तिनको पाद्यार्घादिले स्वागत गरेर विनम्र स्वरमा भने ॥२०॥२१॥ हे मुनिश्वर!

हिमवानुवाच–

किमर्थमागतः स्वामिन् वदस्व मुनिसत्तमम् ।
महद्भाग्येन सञ्जातं त्वदागमनमुत्तमम् ॥२२॥

नारद उवाच–

श्रृणुशैलेन्द्र मद्वाक्यं विष्णुना प्रेषितोऽस्म्यहम् ।
योग्यं योग्याय दातव्यं कन्यारत्नमिदं त्वया ॥२३॥

---

हजुरको आगमन मंगलको सूचक छ । कुनै पूर्व वा अहिलेकै कुनै उत्तम कर्मको फल उदय नभई हजुर जस्ता तपस्वी त्रिकालज्ञ मुनिको दर्शन पाउन सकिन्न । अतः के कारण परेर यो हजुरको शुभागमन भएको हो आज्ञा हवस् ॥२२॥ हिमालयको यस्ता वचन सुनेर नारद मुनि आज्ञा गर्दछन् – हे नगाधिराज! म भगवान् विष्णुको आज्ञाले यहाँ आएको हुँ । तपाईंकी कन्यारत्न माग्ने कन्यार्थी भएर । फेरि योग्य कन्या सुयोग्य वरलाई सुम्पनु राम्रो कुरा हो ॥२३॥

वासुदेव समो नास्ति ब्रह्मशक्रशिवादिषु ।
तस्मै देया त्वया कन्या अत्रार्थे सम्मतिर्मम ॥२४॥

हिमवानुवाच-

वासुदेवः स्वयं देवः कन्यां प्रार्थयते यदि ।
तदा मया प्रदातव्या त्वदागमन-गौरवात् ॥२५॥

---

भगवान् विष्णुको समान शिव, इन्द्र, अग्नि, वरुण, ब्रह्मा आदि कोही पनि छैनन् । अतः विष्णु भगवान्लाई तपाईंकी कन्यारूपी रत्न दिने मेरो पनि पूर्ण सम्मति छ ॥२४॥ नारद मुनिको यस्तो वचन सुनेर पर्वतराज हिमालय भन्दछन्– हे नारद ! स्वयं विष्णु भगवान्ले मेरी कन्या मागेपछि म अवश्य दिन्छु, यसमा शंका छैन । फेरि तपाईंले यहाँ आएर दर्शन दिने हेतु पनि यही रहेछ भन्ने थाहा पाएँ ॥२५॥ हिमालयको सम्मति पाएपछि नारद मुनि

इत्येवं गदितं श्रुत्वा नभस्यन्तर्दधे मुनिः ।
ययौ पीताम्बरधरं शंखचक्रगदाधरम् ।।२६।।
कृताञ्जलिपुटो भूत्वा मुनिन्द्रस्तमभाषत ।

नारद उवाच-

श्रृणु देव भवत्कार्यविवाहो निश्चितस्तव ।।२७।।

---

विदा भएर सरासर शंख, चक्र, गदा र पद्म धारण गर्ने विष्णु भगवान्को सम्मुख उपस्थित भए ।।२६।। उनले प्रणाम गरेर विन्ती गरे– हे प्रभो ! हजुरको विवाह गर्ने निधो गरेर आएको छु ।।२७।। यति भनेर नारद मुनि अन्य कुरै नगरी आफ्नू आश्रममा गए । यता गिरिराज हिमालयले आफ्नी कन्या पार्वतीसित प्रसन्न भएर भने– हे पुत्री पार्वती ! मैले गरुडध्वज विष्णु भगवान्सित तिम्रो विवाह गर्ने पक्का निधो गरें । आफ्ना पिताको यस्ता

इत्युक्त्वा स तु देवर्षिर्नारदो गृहमागतः ।
हिमवांस्तु तदा गौरीमुवाच वचनं मुदा ॥२८॥
दत्तासि त्वं मया पुत्रि देवाय गरुडध्वजे ।
श्रुत्वा वाक्यं पितुर्देवी गता सा सखिमन्दिरम् ॥
भूमौ पतित्वा सा तत्र विललापातिदुःखिता ॥२९॥
विलपन्तीं तदा दृष्ट्वा सखी वचनमब्रवीत् ।

---

वचन सुनेर केही पनि उत्तर नदिई पार्वती सरासर आफ्नी सखीलाई भेट्न गइन् र सखीको सामु पुगेर अत्यन्त दुःखी मनले पृथ्वीमा ढलेर रोई घोर विलाप गर्न लागिन् ॥२८॥ ॥२९॥ उनकी सखीले अकस्मात् आउनासाथ त्यसरी रुन र विलाप गर्न लागेकी पार्वतीसित तत्र स्वर-

सख्युवाच-

किमर्थं दुःखिता देवि कथयस्व ममाग्रतः ॥३०॥
ततो भविष्यति सुखं तत् करिष्ये न संशयः ।

पार्वत्युवाच-

सखि ! श्रृणु मम प्रीतिं मानसीं महतीं यथा ॥३१॥
महादेवञ्च भर्तारं करिष्येऽहं संशयः ।
एतन्मे चिन्तितं कार्यं तातेन कृतमन्यथा ॥३२॥

---

मा सोधिन्- हे गौरी, हे पार्वती ! तिमीलाई के कष्ट आइलाग्यो, उचित भए मलाई सुनाऊ ॥३०॥ तिम्रो कष्ट मैले जे गरेर निवारण हुनेछ, म त्यही कार्य निश्चय नै गर्नेछु। सखीको सान्त्वनायुक्त वचन सुनेर पार्वती भन्न लागिन्- हे सखी ! यदि तिम्रो मलाई प्रसन्न र सुखी तुल्याउने इच्छा छ भने मैले भनेको कुरा सुन ॥३१॥ हे सखी ! श्रीमहादेव पति पाउने मेरो उत्कट अभिलाषा छ, तर मेरा पिता हिमालयले मेरो अन्तै विवाह गरिदिने विचार गर्नु भएको छ ॥३२॥ हे सखी ! यसै निम्ति अब म यो शरीर

तस्माद्देहपरित्यागं करिष्येऽहं सखि प्रिये ।
पार्वत्या वचनं श्रुत्वा सखी वचनमब्रवीत् ॥३३॥

सख्युवाच-

पिता यत्र न जानाति गमिष्यामो हि तद्वनम् ।
इत्येवं सम्मतिं कृत्वा नीता सा च महद्वनम् ॥३४॥

---

नै त्यागिदिन्छु । पार्वतीका यस्ता वचन सुनेर सखीले भनिन् ॥३३॥ हे पार्वती ! यस कुरामा तिमी डराउनुपर्दैन-हामी दुवै एउटा घोर वनमा जाऔं, त्यो स्थान तिम्रो पिता हिमालयले कुनै युक्तिले पनि पत्तो पाउन नसकन् । यति सल्लाह गरेर ती दुवै सखी एउटा घोर वनमा पुगे ॥३४॥ उता हिमालयले आफ्नी पुत्री पार्वतीलाई घरमा देखेनन् र यता-

पिता निरीक्षयामास हिमवांस्तु गृहे गृहे ।
केन नीता च मे पुत्री देवदानवकिन्नरैः ॥३५॥
नारदाग्रे कृतं सत्यं कि दास्ये विष्णवेऽपि च ।
इत्येवं चिन्तयाविष्टो मूर्छितो निपपात ह ॥३६॥
हा हा कृत्वा प्रधावन्तो लोकास्तेगिरिपुङ्गवम् ।
ऊचुर्गिरिवरं सर्वे मूर्च्छाहेतुं गिरे वद ॥३७॥

---

उता वर-पर निकै खोजी गरे तर कतै पनि फेला पार्न सकेनन् । अनि-मेरी कन्या पार्वतीलाई देव, दानव, गन्धर्व किन्नर आदि कसैले हरण गरेर लग्यो ॥३५॥ अघि नारद मुनिसित मैले कन्या विष्णु भगवान्लाई दिने प्रतिज्ञा गरेको हूँ, अब त्यो कसरी पूर्ण पार्ने ? यस्तै अनेक तर्क र चिन्ता गर्दै विचेत भएर भूमिमा ढले ॥३६॥ हिमालयको त्यस्तो अवस्था भएको सुनेर उनका इष्ट-मित्र छिमेकीहरू हाहाकार गर्दै हिमालयको घरमा पुगे अनि मूर्च्छा पर्नको कारण सोध्न थाले ॥३७॥ तिनीहरूको प्रश्न सुनेर गिरिराजले भने– हे सज्जन हो !

गिरिरुवाच-

केनापि दुष्टसत्त्वेन कन्यारत्नं हृतं मम ।
दष्टार वा कालसर्पेण सिंहव्याघ्रेण वा हता ॥३८॥
न जाने क्व गता पुत्री केन दुष्टेन वा हृता ।
चकम्पे शोकसन्तप्तो वातेनेव महातरुः ॥३९॥

---

कुनै पापिष्ट दुष्टात्माले मेरी पुत्री पार्वतीलाई अपहरण गरेर लग्यो अथवा कुनै कालरूपी सर्पले डस्यो कि सिंह-व्याघ्र आदि कुनै वनको जन्तुले खायो ॥३८॥ मेरी पुत्री पार्वतीको कतै पत्ता पाउन सकिन, कहाँ गई केही थाहा पाउन सकिन । अवश्य कुनै पापीले हरण गरेर लग्यो । यस्ता कुरा गर्दै थिए, अकस्मात् चिन्ता-शोक बढेर ठुलो हुरीले कम्पित पारिएको महान् बृक्ष जस्तै थर-थर काम्न थाले ॥३९॥ अनि हे पार्वती ! तिम्रा पिता हिमालयले

गिरिर्वनाद्वनं यातस्त्वदालोकनकारणात् ।
सिंहव्याघ्रश्च भल्लूकैरादिभिश्च महावनम् ।।४०।।
त्वं चापि विपिने घोरे व्रजन्ती सखिभिः सह ।
तत्र दृष्ट्वा नदीं रम्यां तत्तीरे च महागुहाम् ।।४१।।

---

बाघ, भालू आदि हिंसक जन्तुहरूले भरिएको वन-वनमा गएर तिमीलाई खोज्न थाले ।।४०।। उता तिमी आफ्नी सखीसित एउटा अत्यन्त डरलाग्दो घोर जंगलमा पुग्यौ र त्यहीं एउटी सुन्दर नदी कल गरेर बगिरहेकी थिइन्, त्यही नदीको तटमा एउटा अन्धकारयुक्त गुफा थियो, त्यो गुफा तिमीले देख्यौ ।।४१।। अनि सखी सहित तिमी त्यही गुफामा गएर लुकिरह्यौ । अनि भोक-प्यास त्यागेर त्यही स्थानमा पार्वती सहित श्रीमहादेवको बालुवाको शिव-लिंगको स्थापना गर्‍यौ ।।४२।।

तां प्रविश्य सखीसार्धमन्नपानविवर्जिता ।
संस्थाप्य बालुकालिङ्गं पार्वत्या सहितं मम ॥४२॥
भाद्रशुक्लतृतीयायामर्चयन्ती तु हस्तभे ।
तत्र वाद्येन गीतेन रात्रौ जागरणं कृतम् ॥४३॥

---

त्यो दिन भाद्र महीनाको शुक्लपक्षको तृतीया तिथि र हस्त नक्षत्र परेको थियो । अनि त्यहीं एकाग्र मनले मेरो पूजा र आराधना आरम्भ गरिदियौ । गीत-वाद्य सहित रात्रिमा नसुतेर जाग्राम गरेर बितायौ ॥४३॥ यस प्रकार तिम्रो इच्छित र उत्तम व्रत पूर्ण भयो। अनि त्यही व्रतको प्रभावले कैलाश पर्वतमा मेरो आसन हल्लन थाल्यो । अनि म तत्काल प्रस्थान गरेर तिम्रो सामुन्ने उपस्थित हुन पुगें । त्यस बेला तिमी आफ्नी

तेन व्रतप्रभावेण आसनं चलितं मम ।
सम्प्राप्तोऽहं तदा तत्र यत्र त्वं सखिभिः सह ॥४४॥
प्रसन्नोऽस्मि मया प्रोक्तं वरं ब्रूहि वरानने ।

पार्वत्युवाच-

यदि देव प्रसन्नोऽसि भर्ता भव महेश्वर ॥४५॥
तथेत्युक्त्वा तु सम्प्राप्तः कैलाशं पुनरेव च ।
ततः प्रभाते सम्प्राप्ते नद्यां कृत्वा विसर्जनम् ॥४६॥

सखीका सामु त्यहीं बसेकी थियौ ॥४४॥ अनि मैले आफ्नू ज्योतिःस्वरूपको दर्शन दिएर तिमीलाई भनें- 'हे शुभे ! मनमा इच्छा लागेको वरदान माग । अनि तिमीले भन्यौ- हे देवाधिदेव महादेव ! यदि मदेखि हजुर प्रसन्न हुनुहुन्छ भने मलाई पत्नीरूपमा स्वीकार गर्नुहोस्, वा मेरो स्वामी बन्नुहवस् ॥४५॥ तिम्रो यस्तो विन्ती सुनेर मैले 'तथाऽस्तु' भनिदिएँ। अनि त्यहाँबाट अन्तर्धान भएर म सरासर कैलाश पर्वत पुगें । यता जब उज्यालो भयो, तब तिमीले पूजा गरेको त्यो पार्थिव (बालुवा) को शिवलिंग नदीमा लगेर बगायौ ॥४६॥

पारणं तु ततः कृत्वाः यदस्ति वनगोचरम् ।
पुनस्तत्रैव सुप्तासि सख्या सार्धं वरानने ॥४७॥
हिमवानपि तत्रैव जगाम गहनं वनम् ॥४८॥
अन्विष्य च चतुर्दिक्षु पानभोजनवर्जितः ।
दृष्ट्वा तत्र नदीतीरे प्रसुप्तं कन्यकाद्वयम् ॥४९॥

---

वनमा पाइने अनेक कन्द-मूल, फल-फूल खाएर सखी सहित तिमीले व्रतको पारायण गर्‍यौ र सखी सहित त्यहीं विश्राम गरिरह्यौ ॥४७॥ तिम्रा पिता गिरिराज हिमालय पनि भोकप्यास त्यागेर कष्टपूर्वक तिमीलाई खोज्दै त्यहीं जंगलमा आइपुगे, अनि यता-उता चारैतिर तिमीलाई खोज्नलागे ॥४८॥ अनि नदी-तटमा दुइटी कन्याहरू सुतिरहेका देख्नासाथ उनले चिन्हे ॥४९॥ अनि नगीचै आएर विशेष प्रसन्नताले तिमीलाई उठाएर काखमा लिई रुनथाले । केही बेरमा चित्त शान्त भएपछि सोधे– हे पुत्री पार्वती ! यो हिंसक जन्तु

उत्थाप्योत्संगमारोप्य रोदनं कृतवान् गिरिः ।

हिमवानुवाच–

सिंहव्याघ्रादिभिर्घोरं किमर्थं वनमागता ॥५०॥

पार्वत्युवाच–

श्रृणु तात मया ज्ञातं विष्णवे मां प्रदास्यसि ।

तदन्यथाकृतं तात तेनाहं वनमागता ॥५१॥

---

बाघ-भालू आदिले परिपूर्ण भएको विकट जंगलमा तिमी घर छाडेर किन आएकी ? ॥५०॥ अनि तिमीले उत्तर दियौ – हे पिता ! म यहाँ आउने कारण भन्दछु, सुन्नुहवस्- तपाईं मलाई विष्णु भगवान्लाई सुम्पिदिन तयार हुनुहुन्थ्यो, मलाई त्यो कुरा मनपरेन र म घर त्यागेर जंगल आएकी हुँ ॥५१॥ अब तपाईं मेरो विवाह कैलाशपति महादेवसित गरिदिन तयार हुनुहुन्छ भने म घर जान तयार छु र विवाह पनि गर्दछु, यदि मेरो वचन मान्नु हुन्न भने

ददासि तात यदि माम् ईश्वराय तदा गृहम् ।
आगमिष्यामि नैवं चेत् इह स्थास्यामि निश्चितम् ॥५२॥
तथेत्युक्त्वा हिमवता नीताऽसि त्वं गृहं प्रति ।
ततो मह्यं प्रदत्तासि कृत्वा वैवाहिकीं क्रियाम् ॥५३॥

---

म यहीं बसिरहन्छु, कतै पनि जान्न ॥५२॥ तिम्रो कुरा सुनेर पर्वतराज हिमालयले भने-पुत्री! तिम्रो इच्छा अनुसार म महादेवसित तिम्रो विवाह गरिदिने छु । यति भनेर बुझाएपछि तिमी घर गयौ अनि तिम्रा पिताले वैदिक विधानले संस्कार गरेर विवाह विधिले मेरो जिम्मा लगाए ॥५३॥ अनि हे पार्वती ! त्यो त्यही हरितालिका व्रतको प्रभाव हो, जसले गर्दा तिम्रो अखण्ड सौभाग्य बढ्यो । फेरि आजसम्म मैले कसैलाई पनि यस्तो उत्तम व्रतको विषयमा

तेन व्रतप्रभावेण सौभाग्यं लब्धवत् त्वया ।
तदादिव्रतराजस्तु न कस्यापि निवेदितः ॥५४॥
ममास्य व्रतराजस्य श्रृणु देवि यथाऽभवत् ।
आलिभिर्हरिता यस्मात्तस्मात्सा हरितालिका ॥५५॥

---

केही चर्चा गरेको थिएन ॥५४॥ हे पार्वती ! अब तिम्रो यस उत्तम व्रतको नाम पनि जान आफ्नी सखीद्वारा तिमी यही व्रतको प्रभावले हरण गरिएकी थियौ, यसै कारण यसको नाम पनि 'हरितालिका' भन्ने प्रख्यात भयो ॥५५॥ यति सुनेर पार्वतीले फेरि सोधिन्- हे स्वामी! त्यस व्रतको नाम त हजुरले आज्ञा भयो र मैले सुनें पनि तर कृपा गरेर यसको विधान पनि आज्ञा हवस् । यो व्रत कस्तो स्थितिमा र कस्तोले गर्ने ? यस व्रतले के फल

देव्युवाच-

नामेदं कथितं देव विधिं वद मम प्रभो ।
किं पुण्यं किं फलं चास्य केन च क्रियते कथम् ॥५६॥

ईश्वर उवाच-

श्रृणु देवि प्रवक्ष्यामि सौभाग्याऽऽरोग्यबर्धकम् ।
स्वसौभाग्यं स्थिरं कर्तुं वाञ्छत्या क्रियते त्विदम् ॥५७॥
अधुनाऽहं विधिं वक्ष्ये नारीसौभाग्यहेतुकम् ।
आच्छाद्य पट्टवस्त्रैस्तु नानावर्णविचित्रितैः ॥५८॥

---

दिन्छ ? अनि कसरी गर्ने ? ॥५६॥ पार्वतीको प्रश्न सुनी शंकरजी आज्ञा गर्नुहुन्छ- हे गौरी! यो सौभाग्य बढाउने व्रत हो । आफ्नू सौभाग्य अटल राख्ने इच्छा हुनेले यत्नपूर्वक यो व्रत अवश्य गरुन् ॥५७॥ यसमा प्रथम वेदी र त्यस वेदीको चार कुनामा केराका थाम र बाँस गाडिदिनू अनि चारैतिर तोरण झुण्डाउनुपर्दछ, अनि अनेक रंगका वस्त्रले मण्डपको श्रृङ्गार गर्नू ॥५८॥ अनि अनेक प्रकारका बास्ना आउने चन्दनादि सामग्रीले

चन्दनेन सुगन्धेन लेपयेद् गृहमंडपम् ।
शङ्ख-भेरी-मृदंगैस्तु कारयेद्बहुनिःस्वनम् ॥५९॥
नानामंगलगीतं च कर्त्तव्यं मम सद्मनि ।
स्थापयेद्बालुकालिंगं पार्वत्या सहितं मम ॥६०॥

मण्डप लिप्नु । शंख, घण्ट, ढोल, मृदंग आदि बाजा बजाउन लगाउनु ॥५९॥ अनि यो मण्डप महादेवको मन्दिर हो भन्दै अनेक गीत-वाद्य बजाउनु र गाउन लगाउनु । बालुवाको शिवलिंग पार्वतीसमेत भएको त्यही मण्डपको माझमा स्थापित गर्नु ॥६०॥ अनेक थरिका सुगन्धित द्रव्य र नाना प्रकारका फल-फूल नैवेद्य, आँप, केरा, ज्यामीर मोसम्मी बकुल, अनार, नारंगी पान-सुपारी आदि अन्यान्य अरू पनि ऋतु अनुसारका फल-फूल मिष्टान्न

पूजयेद्बहुपुष्पैश्च गन्धधूपादिभिस्तथा ।
नानाप्रकारैर्नैवेद्यै रात्रौ जागरणं चरेत् ॥६१॥
नारिकेलपूगीफलैर्जम्बीरैर्बकुलैस्तथा ।
बीजपुरैः सनारंगैः फलैश्चान्यैश्च भूरिशः ॥६२॥
ऋतुकालोद्भवैर्भूरिप्रकारैः कन्दमूलकैः ।
गन्धपुष्पैर्धूपदीपैर्मन्त्रेणानेन पूजयेत् ॥६३॥

---

राखेर पूजा गर्नु ॥६१॥ ॥६२॥ मूलका मन्त्र अनुसार धूप-दीप सहित नैवेद्य आदि चढाउनु र मन्त्र चाहिं –'ॐ नमः शिवाय०' देखि आरम्भ गरेर 'देहि मामम्ब पार्वती!' सम्म पढ्दै प्रार्थना गर्नु॥६३॥ मन्त्रको अर्थ- शिव, शान्त, शूली, पंचमुखी नन्दी भृङ्गी, चतुःषष्टि योगिनी, भूत-प्रेत, महाकाल आदि गणहरूले सुशोभित हे महादेव ! हजुरलाई बारम्बार

नमः शिवाय शान्ताय पञ्चवक्त्राय शूलिने ।
नन्दिभृङ्गिमहाकालगंधयुक्ताय शम्भवे ॥६४॥
शिवायै हरकान्तायै प्रकृत्यै सृष्टिहेतवे ।
शिवायै सर्वमांगल्यै शिवरूपे जगन्मये ॥६५॥
शिवे कल्याणदे नित्ये जगन्मातर्नमोऽस्तु ते ।
शिवरूपे नमस्तुभ्यं शिवाय सततं नमः ॥६६॥

---

नमस्कार छ ॥६४॥ शिवा, शिवप्रिया, प्रकृति, कारण, श्रीपार्वती मंगल-स्वरूपा, जगत् रूपा तपाईंलाई नमस्कार छ ॥६५॥ तिमी ब्रह्मचारिणी जगद्धात्री, सिंहवाहिनी देवीलाई बारम्बार प्रणाम छ । संसारको भयबाट पीडित सन्तप्त भएको मेरो रक्षा गर ॥६६॥६७॥

नमस्ते ब्रह्मचारिण्यै जगद्धात्र्यै नमो नमः ।
संसारभयसन्तापात्त्राहि मां सिंहवाहिनी ॥६७॥
येन कामेन देवि त्वं पूजितासि महेश्वरि ।
राज्यसौभाग्यसम्पत्ति देहि मामम्ब पार्वति ॥६८॥
मन्त्रेणानेन देवि त्वां पूजयित्वा मया सह ।
कथां श्रुत्वा विधानेन दद्यादन्नं च भूरिशः ॥६९॥

---

हे पार्वती, हे माहेश्वरी ! हे शिवा, पार्वती ! जुन कामनाले यो व्रत गरिरहेकी छु, त्यो मेरो कामना पूर्ण पार । राज्य, सौभाग्य र अतुल सम्पत्ति प्रदान गर ॥६८॥ फेरि महादेव आज्ञा हुन्छ – हे शुभे ! यो उपरोक्त मन्त्र र स्तुति-प्रार्थना सहित तिम्रो पनि पूजन गर्नुपर्दछ ॥६९॥ आफ्नू शक्ति अनुसार वित्तशाठ्य नगरेर गाई, सुवर्ण आदि पठित ब्राह्मण-

ब्राह्मणेभ्यो यथाशक्ति देयावस्त्रहिरण्यगाः ।
अन्येषां भूयसी देया स्त्रीणां वै भूषणादिकम् ॥७०॥
भर्त्रा सह कथां श्रुत्वा भक्तियुक्तेन चेतसा ।
कृत्वा व्रतेश्वरं देवि सर्वपापैः प्रमुच्यते ॥७१॥

---

लाई दान देओस् । अन्यान्य निमन्त्रित ब्राह्मणहरूलाई पनि दक्षिणा दिनु र सधवा ब्राह्मणीहरूलाई यथाशक्ति सौभाग्य द्रव्य, वस्त्राभूषणहरू भक्तिपूर्वक दिनुपर्दछ ॥७०॥ हे पार्वती ! जुन नारी आफ्ना पतिसहित श्रद्धा भक्तिपूर्वक यो सर्वश्रेष्ठ हरितालिकाको कथा सुन्दछे, त्यसका समस्त पाप नष्ट भएर जानेछन् ॥७१॥ त्यसलाई सात जन्मसम्म निष्कण्टक राज्य मिल्नेछ

सप्तजन्मभवेद्राज्यं सौभाग्यं चैव वर्द्धते ।
तृतीयायां तु या नारी आहारं कुरुते यदि ॥७२॥
सप्तजन्म भवेद्वन्ध्या वैधव्यं जन्मजन्मनि ।
दारिद्र्यं पुत्रशोकं च भजते कष्टभागिनी ॥७३॥

---

र अखण्ड सौभाग्यको वृद्धि हुनेछ । जुन नारी भाद्र शुक्ल तृतीयाको दिन व्रत नगरेर बस्तछे वा मनपरि खान्छे ॥७२॥ त्यो नारी सात जन्मसम्म सन्तान रहित बाँझी रहने छ । फेरि पापले प्रत्येक जन्ममा विधवा पनि हुनेछ । धन-हीन दरिद्री भई अनेक कष्टहरू पनि भोग्नु पर्नेछ । सन्तान शोकले कहिल्यै सुखी हुन दिनै छैन ॥७३॥ हरितालिका व्रत त्यागने

पच्यते नरके घोरे नोपवासं करोति या ।
अन्नाहारात् शूकरी स्यात् फलभक्षण-मर्कटी ॥७४॥
जलौका जलपानेन क्षीरहारेण सर्पिणी ।
मांसाहाराद् भवेत् व्याघ्री मार्जारी दधिभक्षणात् ॥७५॥

---

नारी मरेपछि रौरव नरकमा जाकिने छ । व्रतमा अन्न खाए सुँगुरनीको जन्म पाउने छ, व्रतमा फल सेवन गरे बाँदरनीको जन्म पाउने छ ॥७४॥ पानी पिए जुकाको जन्म पाउने छ, दूध खाए विषालु सर्पिणीको जन्म पाउने छ, मासु-माछा खाए बाघिनीको जन्म पाउने छ, दही खाए बिरालीको जन्म पाउने छ ॥७५॥ मिष्टान्न (मिठाई) आदि खाए कमिलाको जन्म पाउने छ, जे पायो त्यही अर्थात् सबै वस्तु खाए माखाको जन्म पाउने छ ।

मिष्टान्नात् च पिपीलिका मक्षिकासर्वभक्षणात् ।
निद्रावशेनाजगरी कुक्कुटी पतिवञ्चनात् ॥७६॥
तस्मात् सर्वप्रयत्नेन व्रतं कुर्युः सदा स्त्रियः ।
रजते काञ्चने ताम्रे वेणवे चाथ मृण्मये ॥७७॥

---

राती जाग्राम नगरेर सुते अजिंगरनीको जन्म पाउने छ । पतिसित मिथ्या बोले वा ढांटे कुखुरी भएर जन्मने छ ॥७६॥ श्रीमहादेव आज्ञा गर्नुहुन्छ- हे पार्वती! यस कारण प्रत्येक नारीले यो व्रत प्रतिवर्ष गर्दै रहनुपर्दछ । सुन, चाँदी, तामा वा बाँसको पात्रमा अन्न, फल वस्त्र र दक्षिणा समेत राखी आफ्ना पुरोहित वा पठित ब्राह्मणलाई दान गरेर दिनु अनि २५६ मुठी चामलको पूर्णपात्र दान गरेर अनि आफूले व्रतको पारायण गरुन् ॥७७॥ ॥७८॥

भाजने विन्यसेद्रत्नं सवस्त्रफलदक्षिणाम् ।
दानं च द्विजवर्याय दद्यात् कृत्वा च पारणम् ॥७८॥
एवं विधि या कुरुते च नारी, त्वया समाना सुमते च भर्ता।
भोगाननेकान् भुवि भुज्यमाना, सायुज्यमन्ते लभते हरेण ॥७९॥
अश्वमेधसहस्राणि वाजपेयशतानि च ।
कथा श्रवणमात्रेण तत्फलं प्राप्यते नरैः ॥८०॥

---

हे पार्वती यस क्रमले जुन नारी प्रतिवर्ष व्रत गर्दछन्, ती तिमीले जस्तै आफ्ना पतिका साथमा यस पृथ्वीमा अनेक सुख भोग गरेर आनन्द-बिहार गर्नेछन् । अनि शरीर त्यागेपछि शिव-सायुज्य प्राप्त गर्नेछन् ॥७९॥ यो हरितालिकाको कथा सुन्नाले पनि हजार अश्वमेध गरेको फल प्राप्त हुनेछ ॥८०॥ त्रिपुरारीले आज्ञा भयो- हे पार्वती! यसरी मैले तिमीलाई सोधे अनुसार

एतत्ते कथितं देवि तवाग्रे व्रतमुत्तमम् ।
कोटियज्ञकृतं पुण्यं यस्यानुष्ठानमात्रतः ॥८१॥

---

यो सम्पूर्ण व्रतमा श्रेष्ठ व्रतको कथा माहात्म्य वर्णन गरेर सुनाएँ । जसको पालन गर्नाले करोडौं यज्ञको पुण्य-फल प्राप्त हुन्छ । शौनकादि ऋषिहरूलाई सूतजीले सुनाउनु भएको यो हरितालिका कथा यथामति श्रोतावर्गलाई सुनाइयो ॥८१॥

॥ इति हरितालिका व्रत-कथा समाप्तः ॥

